स्थानच्युतिर्बन्धुविरोधता च दीनस्यखेटस्यदशाविपाके ।
जीवत्यसौ कुत्सितहीन वृत्यात्यक्तोजनै रोगनिपीडितःस्यात् ९
दुःखार्दितस्यापि दशाविपाके नानाविधं दुःखमुपैतिनित्यम् ।
विदेशगो बन्धुजनैर्विहीन श्चौराग्निभूपैर्भयमातनोति ॥१०॥
वैकल्य खेटस्यदशाविपाके वैकल्यमायाति मनो विकारम् ।
मित्रादिकानांमरणं विशेषात्स्त्रीपुत्रयानाम्बरचौरपीडाम् ११
दशाविपाके कलहं वियोगं खलस्यखेटस्यापितुर्वियोगम् ।
शत्रोर्जनानां धनभूमिनाशमुपैतिनित्यं स्वजनैश्च निन्दाम् १२
कोपान्वितस्यापि दशाविपाके पापाः समायान्ति बहुप्रकारैः
विद्याधनस्त्रीसुतबन्धुनाशं पुत्रादिकृच्छ्रं त्वथनेत्ररोगम् १३

राहु और केतु जिस भाव के स्वामी के साथ होकर जिस भाव में होते हैं उनके फलों को देते हैं। इससे यह भी जानना चाहिये कि केवल राहु वा केतु जिस भाव में होते हैं उस भाव का अनिष्ट ही करते हैं ॥ १३ ॥

॥ इति प्रथमोध्यायः ॥

---

## अथ योगाध्यायः ।

**केन्द्रत्रिकोणपतयः सम्बन्धेन परस्परम् ॥**
**इतरैरप्रसक्ताश्चेद्विशेषफलदायकाः ॥ १ ॥**

अत्राध्याये योगोनाम भाग्ययोगः । केन्द्रस्थानानि प्रथम चतुर्थं सप्तम दशमानि त्रिकोणं नवमं पञ्चमञ्च केन्द्रस्य त्रिकोणस्य च ये स्वामिनो ग्रहाः ते परस्परं वक्षमाणरूपेण परस्परसम्बन्धेन फलदायका भाग्ययोगकर्तारो भवन्ति यदि च इतरैः केन्द्रत्रिकोणातिरिक्तस्थानस्वामिभिरप्रसक्ताश्चेत् स्युस्तदा विशेषफलदायका भवन्ति-यदि च प्रसक्तास्सम्बन्धविशिष्टास्तदाकुत्रचित्फलदायकाः कुत्राचिन्नफलदायका भवन्तीति । यद्यपी तरग्रहास्तृतीयषष्ठाष्टमद्वादश द्वितीयैकादशाधीशास्तथापि-पूर्वाध्याये द्वितीयद्वादशेशयोरन्यस्थानानुरूप गुणकथनात् विशेषतस्सम्बन्धवशादेव तयोः फलकथनात् । अष्टमेशस्यचाग्रे वक्षमाणत्वात् अत्र त्रिषडायेशा एवैतरशब्देन ग्राह्याः शिष्टाचाराच्च । अत्रकैश्चित्कल्पितायुक्तिरपि इ कारेणत्रयः त कारेण षट् इतर शब्देनैकादश परं नेयंयुक्तिः समीचीनेति ॥ १ ॥

केन्द्रत्रिकोणपती परस्पर सम्बन्ध होने से इतर ग्रहों से त्रिषडायाधीश से यदि सम्बन्ध नहीं करै तो विशेष फलदायक भाग्य योग कारक होते हैं ॥ १ ॥

**केन्द्रत्रिकोणनेतारौ दोषयुक्तावपि स्वयम् ॥**
**सम्बन्धमात्राद्वलिनौ भवेतां योग कारकौ ॥२॥**

केन्द्रत्रिकोणनेतारौ केन्द्रत्रिकोणयोः स्वामिनौ स्वयं दोषयुक्तौ त्रिषडाधीशावपि चेत्स्तस्तदापि सम्बन्धकारणेन बलिनौ योगकारकौ भवेताम् परमत्रपौनरुक्तत्वात्तथा पूर्वं त्रिषडायाधीशसम्बन्धवशाद्योगस्य दौर्बल्यत्वादिदानिन्तु स्वयं दोषयुक्तत्वेपि योग्यप्राबल्यत्वाद्दोषापत्तेः प्रथमं पूर्वश्लोकमेवविचार्यते । केन्द्राधीशाश्चत्वारः । त्रिकोणाधीशौ द्वौ त्रिषडायाधीशास्त्रयः । तत्र योग विभागे—लग्नेश पञ्चमेशयोः सम्बन्धादेकोयोगः चतुर्थेशपञ्चमेशयोस्सम्बन्धात् द्वितीयः सप्तमेश पञ्चमेशयोस्सम्बन्धात्तृतीयः दशमेशपंचमेशयोस्सम्बन्धाच्चतुर्थः लग्नेशनवमेशयोस्सम्बन्धात्पञ्चमः चतुर्थेशनवमेशयोस्सम्बन्धात्षष्ठः सप्तमेशनवमेशयोस्सम्बन्धात्सप्तमः दशमेशनवमेशसम्बन्धादष्टमः इत्यष्टौ योगाः मुख्याः तत्रापि सम्बन्धवशादनेकेभवन्ति । तत्रत्रिषडायेशानां सम्बन्धवशाद्योगस्य दौर्बल्यम् । तत्र वल विचारार्थं यथा संहितासुवर्णाद्यावलिनोयथोत्तरमितिरीत्या वर्णादीनां रुपोत्तरगुणाः कल्पितास्तथैव गुणानुरोधेनप्रबलाश्चोत्तरोत्तरमित्युक्तत्वात् लग्नेस्यैकः

चतुर्थस्य द्वौ सप्तमस्यत्रयः दशमस्य चत्वारः पञ्चमस्य द्वौ नवमस्य चत्वारः । तृतीयस्यैकः षष्ठस्यद्वौ एकादशस्यत्रयोगुणाः पूर्वैः कल्पिताः । तत्र लग्नेशपञ्चमेशयोः सम्बन्धवशाद्भाग्ययोगस्य त्रयोगुणाः सम्पन्नाः । तत्र तृतीयेशसम्बन्धाद्वाषष्ठेशसम्बन्धाद्भाग्ययोगोवशिष्यते । परं लाभेशस्य वा तृतीयषष्ठाधीशयोर्वासम्बन्धान्न भाग्ययोगः तुल्यशुभपापगुणत्वात् । चतुर्थपञ्चमाधीशयोस्सम्बन्धेतद्वत्तृतीयलाभाधीशयोः सम्बन्धवशाद्भाग्ययोगाभावः । सप्तमेशपञ्चमेशसम्बन्धे षष्ठलाभाधीशयोः सम्बन्धाद्भाग्ययोगाभावः दशमेचतुर्थेश योः सम्बन्धे तृतीयषष्ठैकादशाधिपानां सम्बन्धवशाद्भाग्ययोगाभावः । तथैव लग्नेशनवमेशयोः सम्बन्धे षष्ठेश लाभेशयोः सम्बन्धाद्भाग्ययोगाभावः नवमेशचतुर्थेशयोः सम्बन्धे तृतीयषष्ठलाभेशानां सम्बन्धवशाद्भाग्ययोगाभावः । परं सप्तमनवमेशयोः सम्बन्धे त्रयाणांपापानां सम्बन्धेनैकोगुणोवशिष्यते । तथा दशमेशनवमेशयोः सम्बन्धे त्रयाणामपि सम्बन्धसत्वे द्वौगुणौ भाग्ययोगस्यावशिष्येते । तेन दशमनवमाधीशयोरेव सम्बन्धः सर्वसम्बन्धाद्बलीयः अमुमेवार्थमत्र वर्णयति । वलिनौकेन्द्रत्रिकोणनेतारौ दशमनवमाधीशौ स्वयं दोषयुक्तावपि

चेत्स्तस्तदापि सम्बन्धवशाद्योगकारकौ तौ भवेतां सामान्यरूपेणैवेतिशेषः ॥ २ ॥

वलीकेन्द्रत्रिकोण के स्वामी अर्थात् दशमेश और नवमेश ये यदि स्वयं त्रिषडायाधीश हों तौ भी इन में यदि सम्बन्ध हो तो ये योग कारक होते हैं ॥ २ ॥

**निवसेतां व्यत्ययेन तावुभौ धर्मकर्मणोः ॥**
**एकत्रान्यतरोवापि वशेच्चेद्योगकारकौ ॥ ३ ॥**

तावुभाविति नवमदशमाधीशौ व्यत्ययेन निवसेतां नवमेशोदशमेदशमेश्चनवमे तदैकोयोगः एकत्र निवसेतां यत्र कुत्राप्येकराशौ भवेतां तदाद्वितीयो योगः अन्यतरोवापि व्यत्ययेन वसेच्चेद्दशमेशोनवमे वा नवमेशो दशमे तदा योगकारकौ भवेताम्-परमत्र पूर्वश्लोकोक्तयोगावैलक्षण्यात् पुनरुक्तिदोषात्केचिदेवं व्याचक्षते । धर्मशब्देन त्रिकोणं कर्मशब्देन केन्द्रस्थानानि ग्राह्याणि । तेन तावुभौ धर्मकर्मणोः केन्द्रत्रिकोणयोर्नेतारौ स्वामिनौ त्रिकोणकेन्द्रयोर्व्यत्ययेन निवसेतां केन्द्रशास्त्रिकोणेत्रिकोणशश्चकेन्द्रे तदैको राजयोगः । एकत्र व्यत्ययेन वाद्वावपि निवसेतां यथा केन्द्रे वा त्रिकोण एव केन्द्रत्रिकोणाधीशौ निवसेतां तदा द्वितीयोयोगः पूर्वापेक्षयान्यूनो भवेत् । अथवा एकएवतयोर्मध्ये व्यत्ययेन वसेत्तदा तृतीयोयोगः यथात्रिकोणेशः केन्द्रे वा केन्द्रेशस्त्रि-

कोणे अथवा चेत् इत्यनेन केन्द्रेशः केन्द्रे त्रिकोणेशस्त्रिकोणे इतियोगव्यत्ययेन निवसेतां–तदा योगकारकौ भवेतामिति परमत्रापि प्राचीनमतविरोधादस्वारस्याच्चायमर्थोनयुक्तः । तेनात्रग्रन्थ संबन्धस्यैव प्राधान्यात्संबन्धान्पूर्वयोगसाहचर्येणैव वर्णयति । तावुभौ बलिनौ केन्द्रत्रिकोणनेतारावर्थात् धर्मकर्मणोः स्वामिनौ स्वयंदोषयुक्तावपियदा व्यत्ययेन स्वस्थानयोर्वैपरीत्येन निवसेतामित्यनेनस्थानसम्बन्धः उक्तः । एकत्र निवसेतामित्यनेनैकत्रस्थितिसम्बन्धः उक्तः । अन्यतरो वाप्यर्थादेकोन्यस्यराशौ स्थित्वान्यं पश्यतिचेदित्यनेन साहचर्य सम्बन्धः उक्तः । अथ वा वसेच्चेदितिकथनात्तुल्ये परस्परदृष्टि योग्ये स्थाने तौ निवसेतामित्यनेनदृष्टि सम्बन्धोद्योतितः तदा योगस्यात्रश्यंभावित्वात्तौ योगकारकौ भवेतां योगकारकौ भवेतामिति द्विरुक्तिः । सम्बन्धोग्रन्थान्तरे ।

व्यत्यस्ताश्रयसम्बन्धश्चान्योन्यालोकसम्भवः ।
एकस्य राशौ संस्थित्या तदीशालोकनादपि ॥
सहवासाच्च सम्बन्धा इत्येतेस्युश्चतुर्विधाः ।
अत्रापि पूर्वपूर्वाः स्युः सम्बन्धा बलवत्तराः ॥ ३ ॥

बलीकेन्द्रत्रिकोणार्थात दशम और नवम स्थान के स्वामी (१) परस्पर स्थान में हों (२) या एक राशि में हों (३)एक एक के

राशि में हो दूसरा देखता हो ( ४ ) या परस्पर दृष्टि के स्थान में हों तो प्रबल योग कारक होते हैं इसी प्रकार और ग्रहों में भी सम्बन्ध देखना चाहिये ॥ ३ ॥

**त्रिकोणाधिपयोर्मध्ये सम्बन्धो येन केनचित् ॥**
**बलिनः केन्द्रनाथस्य भवेद्यदि सुयोगकृत् ॥ ४ ॥**

अत्र सम्बन्धगुणं दर्शयति ।

त्रिकोणाधिपयोः पञ्चमनवमेशयोर्मध्ये येन केन चित्सह बलिनः केन्द्रनाथस्य लग्नचतुर्थ सप्तम दशमेशानां मध्ये बलवतः सम्बन्धो भवेत्तदा सुयोगकृत् स्यात् । परमत्रपूर्वावैलक्षण्यात् पञ्चम नवमेशयोर्मध्ये यस्य कस्य केन्द्रनाथान्यतरेणबलवता सह सुयोगकृत सुयोगं करोतीति स्थानसम्बन्धो भवेत्तदा सुयोग कृत्स्यात्–अथवा बलिनः केन्द्रनाथस्य दशमाधिपतेः पञ्चम नवमाधिपत्यन्यतरेण सह यदि सुयोगकृदर्था-त्स्थानसम्बन्धो भवेत्तदा सुयोगकृत पूर्वलक्षणेन सुफलं विदधातीति ॥ ४ ॥

नवमेश वा पञ्चमेश किसी के साथ यदि दशमेश का स्थान सम्बन्ध हो तो भाग्य योग कारक होता है क्योंकि दूसरे ग्रहों का जो सम्बन्ध होगा वह स्थान सम्बन्ध के वश अल्प बलवान होगा इस कारण सम्बन्ध के प्रबलता से योग होजायगा ॥ ४ ॥

**दशास्वपि भवेद्योगः प्रायशो योगकारिणोः ॥**
**दशाद्वयीमध्यगतस्तदयुक्शुभकारिणाम् ॥ ५ ॥**

प्रायशो वाहुल्येन योगकारिणोः ग्रहयोः या दशा द्वयी दशाद्वयसमाहारः । तस्यां तद्युक्शुभकारिणां योगकारकग्रहसम्बन्धराहितानां शुभकारिणां दशासु अर्थादन्तर्दशासु योगः शुभप्राप्तिर्भवेत् । यथा नवमदशमाधीशयोः सम्बन्धाद्यदि भाग्ययोगः स्यात्तदा नवमेशस्य दशमेशस्य वा दशायां पञ्चमाधिपतेरन्तर्दशायां भाग्ययोगावाप्तिः । अथवा योग कारिणोःग्रहयोर्या दशाद्वयी एकस्य दशान्यस्यान्तर्दशा यथा नवमदशमाधीशयोः सम्बन्धे दशमेशस्य दशायां नवमेशस्यान्तर्दशा वा नवमेशस्यदशायां दशमेशस्यान्तर्दशा तन्मध्यगतो योगः तद्युक् शुभकारिणां तत्सम्बन्धरहितानां शुभकारिणां दशासु प्रत्यन्तर्दशादिषु भवेदित्यर्थः ॥ ५ ॥

किसी योगकारी ग्रह की दशा में उसके सम्बन्धी योगकारी की अन्तर्दशा हो तो इन दोनों से सम्बन्धरहित जो शुभग्रह उनकी प्रत्यन्तर्दशा में अवश्य शुभफल की प्राप्ति होती है ॥ ५ ॥

**योगकारकसम्बन्धात्पापिनोपि ग्रहाः स्वतः ॥**
**तत्तद्भुक्त्यनुसारेण दिशेयुर्योगजं फलम् ॥६॥**

स्वतः पापिनोपिग्रहाः त्रिषडायाधीशा अपि योगकारकसम्बन्धाद्योगकारकग्रहसम्बन्धेन तत्तद्भूक्त्यनुसारेण तत्तद्ग्रहान्तर्दशानुसारेण योगजं फलमेवदि-

शेयुः अर्थात् योगकारकग्रहेण सह यदि पापाना-मपि सम्बन्धश्चेत्तदा तत्रयदि भाग्ययोगावशिष्टत्वं-स्यात्तदा पापग्रहा अपिस्वदशायां योगकारकग्रहस्या-न्तर्दशायां शुभफलमेवदद्युरिति । एतेन पापानां दशासु-तत्सम्बन्धिशुभभुक्तौ शुभफलमेवस्यादिति सूचितम् ॥६॥

योगकारक ग्रहके साथ सम्बन्ध होने से त्रिषडायाधीश भी अपनी दशा में शुभग्रह की अन्तर्दशा में शुभफलही देते हैं। अर्थात् योगकारक ग्रहके साथ सम्बन्ध होने से पापी ग्रह की दशा में भी जब शुभदायी ग्रह की अन्तर्दशा होती है तब शुभही फल होता है ॥ ६ ॥

**केन्द्रत्रिकोणाधिपयोरेकत्वे योगकारकौ ॥**
**अन्यत्रिकोणपतिना सम्बन्धो यदि किंपरम्॥७॥**

सर्वोत्कृष्टं योगान्तरमाह । केन्द्रत्रिकोणाधिपयो-रेकत्वे सतियोगकारकौस्तः तत्रयद्यन्यत्रिकोणपतिना सम्बन्धश्चेत्तदाऽतः परं किमपि न स्यात् अतः दरराज योगा भाव इति अत्रैकत्वंतु स्थानाधीशत्वेन सम्बन्धेन च द्विवचनान्तत्वात् । अत्र योग विभागः । वृषभ लग्ने केन्द्रत्रिकोणाधिपः शनिर्योगकर्ता तत्रान्यात्रिको-णाधिपते र्बुधस्य सम्बन्धो भवेत्तदा प्रबलोयोगः कर्कट लग्ने दशमपञ्चमाधिपतिर्भौमः तेन गुरोः सम्बन्धश्चे-त्तदोत्कृष्टो योगः सिंह लग्ने चतुर्थ नवमाधीशोभौमः

पञ्चमाधीशेनगुरुणा सम्बन्धं विदधाति चेत्प्रबलो राज-योगः । तुलालग्ने चतुर्थपञ्चमाधीशः शनिः नवमाधी-शेनबुधेन सम्बध्यते तदा राजयोगः । मकर लग्ने पञ्च-मदशमाधीशः शुक्रो नवमेशेन बुधेन सम्बन्धवाँश्चे-त्तदाप्रबलभाग्ययोगः कुंभलग्ने चतुर्थनवमाधीशेन शुक्रेण पञ्चमाधीशो बुधस्सम्बन्धं करोति चेत्तदा प्रब-लोराजयोगः । सम्बन्धवशादेकत्वेऽन्यत्रिकोणाधीशेन च सम्बन्धे पूर्वदर्शितयोगान्न्यूनो योगो विज्ञेयः । यथा मेषे चतुर्थपञ्चमाधीशयोः शशिसूर्ययोस्सम्बन्धे गुरोरपि सम्बन्धश्चेत्तदापि प्रबलोयोगः परं पूर्वापेक्षया-ऽस्य न्यूनत्वम् । अन्यत्रिकोणपतिना सहसम्बन्धं वद-ताचार्येणत्रिकोणाधिपतेः पापत्वेपि शुभत्वं वर्णितम् । यथा मकरलग्ने अन्यत्रिकोणाधिपतिर्बुधःषष्ठेशः । कर्के लग्ने अन्यत्रिकोणाधिपतिर्गुरुः षष्ठेशः । सिंहलग्ने अन्यत्रिकोणाधिपतिर्गुरुरष्टमेशः कुंभलग्ने च पञ्चमा-धिपतिर्बुधोष्टमर्क्षेशः परमेतेषां सम्बन्धाद्भाग्ययोगस्य सर्वोत्कृष्टत्वमेव तेनत्रिकोणाधिपतिः केन्द्राधीशेन सम्ब-न्धे सर्वथा शुभफलद एवेति ॥ ७ ॥

केन्द्र और त्रिकोण स्थान के स्वामी यदि एक ही हों तो योग कारक होते हैं इसमें यदि दूसरे त्रिकोण के स्वामी के साथ सम्बन्ध हो तो इससे उत्तम कोई भाग्य योग नहीं होता अथवा

एकही केन्द्रेश के साथ दोनों त्रिकोणेश का सम्बन्ध हो तौभी परमोत्तम भाग्य योग होता है ॥ ७ ॥

**यदि केन्द्रे त्रिकोणे वा निवसेतां तमोग्रहौ ॥**
**नाथेनान्यतरेणापि सम्बन्धाद्योगकारकौ ॥८॥**

राहुकेत्वोः स्थानाभिप्रायेणैव तत्स्वामित्वं यद्यद्भावगताविल्यादिनोक्तम् । तत्र त्रिकोणे तयोः स्थितौ केन्द्रनाथे न केन्द्रे स्थितौ त्रिकोणाधीशेनचसह सम्बन्धे पूर्व परिभाषया योगःस्पष्टतर एवेत्यनेनामुमेवार्थंकथयाति । यदि तमोग्रहौ राहुकेतू केन्द्र वात्रिकोणे निवसेतां तदा तयोरन्यतरेण नाथेन सम्बन्धाद्योगकारकौ भवेताम् । अत्र केन्द्रेस्थित्या केन्द्रनाथेन त्रिकोणे स्थित्या त्रिकोणनाथेन च सम्बन्धाद्योगविशेषः सूचित इति ॥८॥

केन्द्र या त्रिकोण में यदि राहु वा केतु हों तो केन्द्रेश वा त्रिकोणेश किसी के साथ सम्बन्ध होने से वे भाग्य योग कारक होते हैं परन्तु केन्द्र में त्रिकोणेश के साथ या त्रिकोण में केन्द्रेश के साथ हो तो विशेष योग जानना चाहिये ॥ ८ ॥

**धर्मकर्माधिनेतारौ रन्ध्रलाभाधिपौ यदि ॥**
**तयोः सम्बन्धमात्रेण न योगं लभतेनरः ॥९॥**

धर्मकर्माधिनेतारौ नवमदशमाधीशौ तावेव यदि रन्ध्रलाभाधिपावष्टमैकादशाधिपौ तदा तयोः सम्बन्धमात्रेण नरो योगं न लभते न प्राप्नोति । परन्तु नवम दशमाधीशयोरष्टमलाभेशत्वासंभवः । यतो नवमेशोलाभेशोन-

भवितुमर्हति तथा दशमेशश्चाष्टमेशो न भवितुं शक्नोति । तथैकत्रैव नवमेशोऽष्टमेशः दशमेशश्चलाभेशो नभवितुमर्हति । समराश्योर्विषमराश्योश्चाधिपत्याभावात् । तेन धर्मकर्माधिनेतारौ यौ अत्र धर्मपदं त्रिकोणबोधकं कर्मपदं च केन्द्रबोधकमर्थात् यौ केन्द्रत्रिकोणाधीशौ । यौ चाष्टमलाभाधीशौ तयोः सम्बन्धश्चेत्तदा नरोयोगं न लभत इतिनिष्कृष्टोर्थः । अत्रतुसम्बन्धसत्वे नवमेशोऽष्टमेशोभवेदथवा दशमेशो लाभेशश्चेत्तदायोगस्य न हानिः तथा चतुर्थाधीशस्यैकादशाधीशत्वे पंचमाधीशस्याष्टमाधीशत्वेयोगस्य न हानिः । पूर्वं दर्शितपरिभाषयात्रिषडैकादशेशानां सम्बन्धे नापि नवमदशमाधीशयोस्सम्बन्धे भाग्ययोगस्य प्राबल्यम् । परं तथैवाष्टमेशस्य प्रबलपापकर्त्तृत्वत्वात् अष्टगुणकल्पने नवमदशमाधीशयोः सम्बन्धे लाभाष्टमाधीशयोः सम्बन्धेन योगनाशाद्वा चतुर्थपञ्चमनवमदशमेशानां सम्बन्धेपि तृतीयषष्ठाष्टमलाभाधीशानां सम्बन्धेन योगनाशादियं पृथगुक्तिः। इति द्वितीयोध्यायः।

---

नवमेशदशमेशके अर्थात् केन्द्रत्रिकोणेशके सम्बन्ध में यदि अष्टमेश और लाभेश का सम्बन्ध हो तो भाग्य योग नहीं होता ॥ ९ ॥

इति भाषाटीकायां द्वितीयोध्यायः ।

---

# अथायुर्दायाध्यायः ।

**अष्टमं ह्यायुषः स्थानमष्टमादष्टमं चयत् ॥**
**तयोरपिऽव्ययस्थानं मारकस्थानमुच्यते ॥१॥**

अष्टमं हि आयुषः स्थानमष्टमाद्यदष्टमं तदपि आयुषः स्थानं तयोरपि व्ययस्थानं सप्तमं-द्वितीयं च मारकस्थानमुच्यत इत्यन्वयः भाग्यव्ययत्वादष्टमं मुख्यमायुषः स्थानम् । ततोयदष्टममर्थात्तृतीयं वलसाहसादि कारकत्वात्तदप्यायुषः स्थानम् । तयोः व्ययस्थानं स्त्रीधन कारणत्वान्मारकस्थानं तन्निश्चयेनेति ॥ १ ॥

अष्टम और अष्टम का अष्टम अर्थात् तृतीय ये आयुःस्थान कहलाते हैं । और इनके जो द्वादश अर्थात् सप्तम और द्वितीय ये मारकस्थान कहे जाते हैं ॥ १ ॥

**तत्राप्याद्यव्ययस्थानाद्द्वितीयं वलवत्तरम् ॥**

तत्रमारकराशावपि आद्यव्ययस्थानात्सप्तमात् द्वितीयं यद् व्ययस्थानं लग्नाद्द्वितीयं तत्प्रवलं मारकस्थानम् यत्तुकैश्चिल्लग्नाद्गणनां स्वीकृत्य द्वितीयात्सप्तमं वलवत्तरमित्युक्तं तदयुक्तं क्रामिकगणनायाः प्रावल्यात्सप्तमस्य प्रथममुपादानाच्चेति । अथ मारकसमयस्य वक्षमाणत्वात् तन्निश्चयकारणभूतमायुर्दायनिश्चयं ग्रन्थान्तरात्संगृह्यात्र लिख्यते ।

देहतातनिधनाधिपा यदा लाभवन्धुसुतधर्मसंस्थिताः ॥
दीर्घमायुरिह विद्धि तत्परं केन्द्रगाश्च खलुदीर्घदा मताः १
सहजवन्धुगताः खलखेचराः पणफरेपि गता यदि केचन ।
त इहमध्यमदाः परतश्चये तइह लाघवखण्डकरा मताः ॥
अन्यच्च ।
अल्पायुर्लग्नपेभानोः शत्रौ मध्येच मध्यमम् ।
मित्रेलग्नेश्वरेतस्य दीर्घमायुरुदाहृतम् ।
अन्यच्च ।

आयुः पितृदिने शाभ्याम् ( १ )
प्रथमयोरुत्तरयोर्वा दीर्घम् ( २ )
प्रथमद्वितीययोरन्त्ययोर्वा मध्यम् ( ३ )
मध्ययोराद्यन्तयोर्वाहीनम् ( ४ )
एवंमन्दचन्द्राभ्याम् ( ५ )
पितृकालतश्च ( ६ )
संवादात्प्रामाण्यम् ( ७ )
विसंवादेपितृकालतः ( ८ )

पितृलाभगेचन्द्रे चन्द्रमन्दाभ्याम (९) अस्यार्थः । लग्नेशाष्टमेशौयदि चरराशौवा स्थिरद्विस्वभावयोर्भवत-स्तदादीर्घायुः द्विस्वभाव राशौ वा चरस्थिरयोर्यदिभवत-स्तदामध्यायुः । स्थिरराशौ वा चरद्विस्वभावयोर्यदिभवत-स्तदाल्पायुः । एवमेव यदि चन्द्रो लग्ने वा सप्तमे भवे-त्तदा लग्नचन्द्राभ्यामन्यथा शनिचन्द्राभ्यां दीर्घादियोगो

विचार्यः । तथा लग्नहोरालग्नाभ्यामपि तथैव विचार्यः । अत्र-प्रकारत्रयेणापि यद्येकरूपायुस्तदा तन्निर्विवादमेव । तथा-ऽभावे प्रकारद्वयागतायुर्ग्राह्यम् । विसंवादे लग्नहोरा लग्नाभ्यामागतमायुर्ग्राह्यमिति । होरा लग्नानयनम् । घटिकादिकमिष्टं द्विगुणं कृत्वा पञ्चभिर्भजेत्तदा लब्धं राश्यादिकं स्यात्तत्सर्वदा स्पष्टरवौ योजनीयं तदाहोरालग्नं भवतीति । अथायुः खण्डादिमानम् ।

रसाङ्कैर्गजाभ्रेन्दुभिः शून्यमासौ
स्त्रिधादीर्घमायुः कलौ संप्रदिष्टम् ॥
चतुःषष्टिबाह्वद्व्यशीतिप्रमाणै
र्मतं मध्यमायुः नृणां वत्सरैः स्यात् ॥१॥
तथाद्वित्रि (३२) षड्वह्नि (३६) शून्याब्धि
(४०) वर्षैर्भवेदल्पमायुर्नराणां युगान्ते ॥

अत्रानिश्चयः । पूर्वोक्तयोगैरेकप्रकारेणाल्पायुषिचत्वा-रिंशत् प्रकारद्वयेन षट्त्रिंशत् प्रकारत्रयेणद्वात्रिंशत् । दी-र्घायुषि प्रकारेणद्वात्रिंशत् प्रकाराभ्यां षट्त्रिंशत् प्रकारैः चत्वारिंशदब्दरूपं खण्डं ग्राह्यम् । मध्येतु । लग्नेशाष्टमे-शाभ्यां चत्वारिंशत् लग्नचन्द्राभ्यां वाशनिचन्द्राभ्यां षट्-त्रिंशत्लग्नहोरालग्नाभ्यां द्वात्रिंशदब्दरूपं खण्डं ग्राह्यम् । वक्ष्माणप्रकारेणाप्यायुर्निश्चये खण्डनिश्चयस्त्वत्रैवोक्तो ग्राह्यः । अन्यथायुर्निश्चयः ।

पितृलाभरोगेशप्राणिनि कण्टकादिस्थैस्त्वतश्चैवंत्रिधा ॥१॥
अस्यार्थः । लग्नसप्तमाष्टमेशयोर्यो वलीसयदि केन्द्रे भवेत्तदादीर्घायुः पणफरे मध्यायुः आपो क्लिमेऽल्पायुः । रव्यादिग्रहाणां मध्ये योऽधिकांशः । असावात्मकारकः । तदष्टमेशः तत्सप्तमाच्च योष्टमेशः । अनयोर्योवली स यदि कारकात्केन्द्रादिषुस्थितश्चेत्तदा दीर्घाद्यायुः । अत्र लग्नं कारकश्च विषमे भवेत्तदाक्रमतः समेतदोत्क्रमत अष्टामादिकं ग्राह्यम् । विषमे लग्ने कारको यदि तृतीये भवेत्समे यदि लाभगो भवेत्तदा केन्द्रस्थित्या वलवतोष्ट-मेशस्याल्पायुः पणफरे मध्यायुः आपोक्लिमेदीर्घायुः । परं-यदि कारक एवाष्टमेशोभवेद्वाष्टमेशस्य कारकेण सहयुतौ सर्वदा मध्यायुरेवेति संक्षेपत आयुर्विचारः ॥

सप्तम और द्वितीय इन दो मारक स्थानों में सप्तम से द्वितीय प्रबल मारक होता है । यहाँ पर संक्षेप से आयुर्दाय का विचार लिखते हैं । लग्नेश यदि सूर्य का मित्र हो तो दीर्घायु सम हो तो मध्यायु शत्रु हो तो अल्पायु जानना १. लग्नदशम और अष्टम के स्वामी केन्द्र या एकादश वा त्रिकोण में हो तो दीर्घायु करते हैं और जो केन्द्र में हो वे दीर्घायु करते हैं । तृतीय और चतुर्थ में पापग्रह हो वा पणफर में कोई ग्रह हो तो वह मध्यायु करता है इससे अन्य स्थान गतग्रह अल्पायु करते हैं ।

लग्नेश और अष्टमेश यदि चर राशि में हों वा एक स्थिर में और दूसरा द्विस्वभाव में हो तो दीर्घायुः । दोनों स्थिर में हो वा एक चर में और दूसरा द्विस्वभाव में हो तो अल्पायु । दोनों

3114

द्विस्वभाव में हो वा एक स्थिर में दूसरा चर में हो तो मध्यायु जानना । लग्न या सप्तम में यदि चन्द्रमा हो तो लग्न चन्द्रमा से अन्यथा शनि चन्द्रमा से और जन्म लग्न तथा होरा लग्न से भी इसी प्रकार आयुर्दाय का विचार करना चाहिये । इसमें तीनों प्रकार से वा दो प्रकार से जो आवे उसको मानना यदि तीनों प्रकार से तीन प्रकार का हो तो जन्म लग्न और होरा लग्न से जो आवे उसको मानना चाहिये । लग्न यदि विषम हो तो क्रम से सम हो तो उत्क्रम से जो अष्टमेश और द्वितीयेश हो उनमें जो बलवान हो वह केन्द्र में हो तो दीर्घायुः । पण फर में हो तो मध्यायु । आपोक्लिम में हो तो अल्पायु होता है इसी प्रकार कारक का जो अष्टमेश और द्वितीयेश हो उनमें जो बलवान हो वह यदि कारक से केन्द्रादि में हो तो दीर्घ मध्य और अल्प क्रम से जानना चाहिये । लग्न विषम हो तो यदि कारक तृतीय में हो सम लग्न होने पर यदि एकादश में हो तो केन्द्र में अल्पायु पणफर में मध्यायु आपोक्लिम में दीर्घायु जानना चाहिये । और कारक तथा अष्टमेश एकही हों वा एक साथ बैठे हों तो सर्वदा मध्यायु ही जानना ॥

तदीशितुस्तत्र गताः पापिनस्तेन संयुताः ॥२॥
तेषां दशाविपाकेषु संभवे निधनं नृणाम् ॥
तेषामसंभवे साक्षाद्व्ययाधीशदशास्वपि ॥३॥

ग्रन्थान्तरादायुषो निश्चयं कृत्वा तदीशितुर्मारकेशस्य दशाविपाकेषु दशान्तर्दशादिरूपसमयेषु तत्रगताःमारकस्थानगता ये पापिनस्तेषांदशान्तर्दशादिषु वा तेन मारकेशेन संयुता ये पापिनोग्रहास्तेषां दशान्तर्दशादिषु संभवे आ-

युषः समाप्तौ निधनं नृणांस्यादिति। तेषां मारकमारक-स्थानगतमारकेशयुतानां दशादिसमयानामसंभवेऽप्राप्तौ साक्षाद्व्ययाधीशस्य लग्नात् द्वादशाधीशस्यदशासुनिधनं स्यादिति ॥ २ ॥ ३ ॥

मारकेश ग्रहकी दशादि समय में मारक स्थान में वा मारकेश ग्रह के साथ जो पापी ग्रह त्रिषडायेश हो उनकी दशान्तर्दशादि में यदि आयुर्दाय का अन्त होता हो तो निधन कहना और यदि आयुः खण्ड के समाप्ति समय में इन ग्रहों के दशादि समय की प्राप्ति न होतो लग्न से जो द्वादशेश उसके दशान्तर्दशादि रूप समय में मरण कहना ॥ २ ॥ ३ ॥

**अलाभे पुनरेतेषां सम्बन्धेन व्ययेशितुः ॥**
**क्वचिच्छुभानां च दशाह्यष्टमेश दशासु च ॥ ४ ॥**

पुनश्चैतेषां द्वादशेशसमयानामलाभे व्ययेशितुर्व्ययेश-स्य सम्बन्धेन क्वचिच्छुभानां च दशानिधनदा। तथाष्टमे-शदशासु दशान्तर्दशादिरूपसमयेषु मरणं वाच्यमित्यर्थः॥ ४ ॥

यदि पूर्वोक्त ग्रहों की दशा न मिलती हो तो द्वादशेश के सम्बन्ध से कहीं कहीं शुभ ग्रहों की भी दशा में मरण कहना और यदि इनकी दशा की भी प्राप्ति न हो तो अष्टमेश की दशा अन्त-र्दशा और प्रात्यन्तर्दशादि समय में मरण कहना ॥ ४ ॥

**केवलानाञ्चपापानां दशासु निधनं क्वचित् ॥**
**कल्पनीयं बुधैर्नृणां मारकाणामदर्शने ॥ ५ ॥**

क्वचित् कुत्रापि पूर्वोक्तानां मारकाणामदर्शनेऽप्राप्तौ

केवलानाञ्चपापानां त्रिषडायाधीशानां दशासुनृणां निधनं कल्पनीयम् । अत्रायुः खण्डस्यापूर्तौ समागतायां मारकदशायां शारीरकक्लेशस्यैव प्राबल्यं न तु मारकयोग इति ॥ ५ ॥

पूर्वोक्त किसी मारक ग्रह की दशा यदि नहीं मिलती हो तो केवल पाप ग्रह की दशा में ही मरण जानना आयुर्दाय रहते यदि मारक ग्रह की दशा आवे तो उसमें शारीरक कष्ट ही कहना चाहिये ॥ ५ ॥

**मारकैः सहसम्बन्धान्निहन्ता पापकृच्छनिः ॥**
**अतिक्रम्येतरान् सर्वान् भवत्येव न संशयः ॥६॥**

पापकृच्छनिः प्रकृत्या पाप फल कर्ता शनिः वा त्रिषडायाधीशत्त्वेनपापकृच्छनिः मारकैः मारकेशग्रहैः सह सम्बन्धात्सर्वान्मारकानतिक्रम्योल्लंघ्य निहन्ता मारकः स्यादत्र न संशयो न सन्देहः । यदा च शनेः पापकर्तृत्वेन मारकसम्बन्धात्प्रबलं मारकेशत्वं स्यात् तदा मारकाधीशस्य शनेः मारकैर्वा पापग्रहैः सम्बन्धादतीवप्राबल्यमिति । अत्रमारकलक्षणे येन केन प्रकारेणापि पापत्वस्यैव मुख्यत्वमिति ॥ ६ ॥

पाप फल करने वाला जो शनि वह मारक ग्रहों के साथ सम्बन्ध करने से सब मारक ग्रहों को लांघ कर आपही मारक होता है इसमें सन्देह नहीं है ॥ ६ ॥

॥ इत्यायुर्दायाध्यायः ॥

# अथ दशाफलाध्यायः ।

न दिशेयुर्ग्रहाः सर्वे स्वदशासु स्वभुक्तिषु ॥
शुभाशुभफलं नृणामात्मभावानुरूपतः ॥१॥
आत्मसंबान्धिनो ये च ये वा निजसधर्मिणः ॥
तेषामन्तर्दशास्वेव दिशन्ति स्वदशाफलम् ॥२॥

सर्वे ग्रहाः शुभाः पापाः वा स्वदशासु षडब्दादिरूपासु वा स्व भुक्तिषु स्वान्तर्दशासु आत्मभावानुरूपतः आत्मनो भाव आत्मभावस्तदनुरूपतः तदनुसारेण यच्छुभाशुभफलं तन्नदिशेयुरित्यर्थः । परन्तु स्वा स्वां दशामुपगताः स्वफलप्रदाः स्युरित्यादिनात्रविरोधः ! तेन स्वदशासु स्वभुक्तिस्वर्थात्स्वदशायामेव या स्वकीयान्तर्दशा तस्यामेव स्वभावानुरूपं फलं न दिशेयुः । स्वभावानुरूपं पापफलप्रदाः पाप फलं शुभफलप्रदाः शुभफलं न दिशेयुः । अथवात्मभावानुरूपो योभावस्ततो यत्फलमर्थात् स्वस्थितभावोत्पन्नं यत्फलं तन्नदद्युरित्यर्थः । तर्हिकदा सम्पूर्णफलं दद्युरित्याकांक्षायामाह। ये ग्रहा आत्मसम्बान्धिनः स्थानसम्बन्धादिसम्बन्ध चतुष्टयान्यतमसम्बन्धयुतः तेषामन्तर्दशासु स्वदशायामेव वा सम्बान्धि ग्रहाभावे ये ग्रहा निजसधर्मिणः निजफलानुरूपफलदातारः यथा त्रिषडायेशाः परस्पर-

सधर्मिणाः त्रिकोणेशौ परस्परसधर्मिणौ तथैव द्वितीय द्वादशाधीशौ सधर्मिणौ अथवा लग्नसप्तमेशयोः द्वितीयद्वादशेशयोः तृतीयलाभेशयोः चतुर्थदशमेशयोः पञ्चनवमेशयोः षष्ठाष्टमेशयोश्च परस्परं सधर्मित्वम् । एवं ये स्वसधर्मिणः तेषामन्तर्दशासु स्वदशायामेव स्वदशाफलं पूर्णतया ग्रहा दिशन्तीति ॥ १ ॥ २ ॥

इस अध्याय में ग्रहों के स्वभाव का वर्णन है । सभी ग्रह अपनी दशा और अपनी ही अन्तर्दशा में अपने भावानुरूप शुभाशुभ फल नहीं करते किन्तु जो ग्रह अपना सम्बन्धी हो वा जो ग्रह अपना निज सधर्मी होते हैं उनकी अन्तर्दशा में अपनी ही दशा में अपने स्वभावानुरूप फल ग्रह करते हैं ॥ १ ॥ २ ॥

**इतरेषां दशानाथविरुद्धफलदायिनाम् ॥**
**तत्तत्फलानुगुण्येन फलान्यूह्यानि सूरिभिः॥३॥**

इतरेषां सम्बन्धादिरहितानां ग्रहाणां अतएव विरुद्ध फलदायिनाम् दशानाथेन विरुद्धफलदा ये तेषामन्तर्दशासु तत्तत्फलानुगुण्येन दशानाथस्यान्तर्दशानाथस्य च यद्यत्फलं तदानुगुण्येन दशानाथफलानि सूरिभिर्ज्ञेयानीतियत्तु कैश्चिदात्मसम्बन्धात्मसधर्मिग्रहाणामलाभे दशानाथस्य फलमुक्तं तदसङ्गतम् । सधर्मिग्रहस्याभावाभावात् । तेन ये ग्रहा दशानाथस्यात्मसम्बन्धिनो ये चात्मसधर्मिणस्तेतु तदनुरूपफलप्रदा एवेति पूर्वश्लोकेन

ध्वनितं तर्हि ये ग्रहा सम्बन्धादिरहितास्ते इतरा अतएव दशानाथेन भिन्नफलदाः तेषामन्तर्दशासु दशान्तर्दशा-नाथयोः फलानुगुण्येन तयोः फलतारतम्येन फलानि-सूरिभिर्ज्ञेयानीतिनिश्चितोर्थः अर्थाद्यदा दशान्तर्दशानाथौ शुभफलदौ तर्हितत्र शुभफलं यदि च पाप फलदौ तत्र पापफलं यत्रैकः शुभ एकः पापस्तत्रामिश्रितं फलमिति ॥ ३ ॥

दशानाथ के सम्बन्धादि से रहित जो दशा नाथ के विरूद्ध फल देने वाले ग्रह उनकी अन्तर्दशा में दोनों के फलोंके तारतम्य से फल जानना चाहिये ॥ ३ ॥

**स्वदशायां त्रिकोणेशभुक्तौ केन्द्रपतिः शुभम् ॥**
**दिशेत्सोपि तथा नोचेदसम्बन्धेन पापकृत्॥४॥**

वस्तुतस्त्वत्रदशाध्याये पूर्वोक्तास्त्रयः श्लोका एवमु-ख्याः स्वदशायामित्याद्यारभ्यतानेव सम्बन्ध विशेषेण ग्रहस्वभाव विशेषण च विवृणोति । पूर्वं केन्द्रेशस्य त्रिकोणाधीशसम्बन्धेन शुभफलप्रदत्वं द्वितीयाध्याये प्रति-पादितं सबन्धाभावेसति केन्द्रेशस्ये पापफलप्रदत्वमेवेति दर्शयति । त्रिकोणेशसम्बन्धविशिष्टः केन्द्रपतिः स्वद-शायां त्रिकोणेशस्य भुक्तावन्तर्दशायां शुभंफलं दिशेत् तथा सोपि त्रिकोणेशोपि स्वदशायां केन्द्रेशस्यान्तर्दशा-यां शुभं फलं दिशेत् एवं नो चेदर्थात्सम्बन्धाभावश्चेत्त-

दा असम्बन्धेन सम्बन्धराहितेन हेतुना स्वदशायां केन्द्रप तिः त्रिकोणेशस्यान्तर्दशायां तथा त्रिकोणेशः केन्द्रेश- स्यान्तर्दशायां च पापकृत् पाप फल कर्ता एव स्यात् यत्तु कैश्चिदसम्बन्धेन पापकृत्केन्द्रपतिः स्वदशायांत्रिकोणे- शान्तर्दशायां शुभं फलंददाति। तथा त्रिकोणशोपि पाप कृत् स्वदशायां केन्द्रेशभुक्तौ शुभंदिशेदित्यादिकमुक्तं तत्तु त्रिकोणशस्य पापत्वाभावात् पापायदि "दशानाथा शुभानां तदसंयुजाम् भुक्तयः पापफलदा" इत्यादि वक्ष्य- माणेन विरुद्धम् ॥ ४ ॥

सम्बन्ध होने से केन्द्रेश अपनी दशा में और त्रिकोणेश की अन्तर्दशा में शुभ फल देता है और वैसेही त्रिकोणेश भी अपनी दशा में और केन्द्रेश की अन्तर्दशा में शुभ फल देता है और यदि सम्बन्ध नहीं हो तो केन्द्रपति अपनी दशा और त्रिकोणेश की अन्तर्दशा में पाप ही फल को करता है ॥ ४ ॥

**आरम्भो राजयोगस्य भवेन्मारकभुक्तिषु ॥**
**प्रथयन्ति तमारभ्य क्रमशः पापभुक्तयः ॥५॥**

यदि राजयोगस्यारंभोमारकग्रहान्तर्दशासुभवेत्। मा- रकग्रहान्तर्दशासु राजयोगारंभः योगकारकग्रहेण मार- कग्रहस्य सम्बन्धवशात्सम्पद्यते। तदा ततः परं याः पापभुक्तयस्तास्तास्तमारभ्य प्रथयन्ति तंराजयोगं प्रथय- न्ति विस्तारयन्ति। अथवा यदि मारकग्रहान्तर्दशासु

राजयोगारंभो भवेत्तदाताः पापभुक्तयः मारकग्रहान्तर्दशाः तमारम्यार्थाद्राजयोगमारभ्य पापभुक्तय इत्युक्तत्वात्पाप-फलमेव प्रथयन्ति । अथवा तं पुरुषं प्रथयन्ति प्रथामात्रयुक्तं कुर्वन्ति नहि राज्ययुक्तमिति । पापभुक्तिषु पाप-फलस्यैव प्राधान्यत्वात् ॥ ५ ॥

यदि राजयोग का आरंभ योगकारी ग्रह की दशा में मार-कग्रह की अन्तर्दशा में हो तो पूर्ण योग नहीं होता केवल आरंभ में ही शुभ फल होकर पीछे आभासतः शुभ फल होता है । ऐसाही शुभग्रह की अन्तर्दशा में यदि पापफल होता हुवा देखा जाय तो केवल आरंभ ही में उसका आधिक्य होकर पीछे क्रमशः नामही का वह रहता है । जैसे मेष लग्न वाले को चन्द्रमा बृहस्पति और शुक्र तीनों ग्रह का सम्बन्ध हो तो चन्द्रमा और बृहस्पति के सम्बन्ध से "केन्द्रत्रिकोण पतयः सम्बन्धेनपरस्परम्" इस श्लोक के अनुसार भाग्य योग हुवा इस में शुक्र मारक ग्रह का सम्बन्ध है । तो सम्बन्ध के कारण शुक्र की अन्तर्दशा में भी कुछ पहले शुभ फल होकर पीछे मारक सम्बन्धी भी फल होगा ॥५॥

तत्सम्बन्धि शुभानां च तथा पुनरसंयुजाम् ॥
शुभानान्तु समत्वेन संयोगो योगकारिणाम् ।६।

योगकारकदशानाथसम्बन्धि शुभानां तथा पुनः असंयुजां योगकारिणां शुभानां दशानाथ सम्बन्धरहितानां पृथग्योगकारिणां शुभग्रहाणां संयोगो दशादशासंयोगः समत्वेन स्यात् समभावेन फलदः स्यादिति

भुक्तिनाथयोः सधर्मित्वं दर्शितम् । तथा पूर्वोक्तस्वदशायां त्रिकोणेशभुक्तावित्यादेर्विशेषश्च प्रतिपादितः ॥ ६ ॥

दशानाथ यदि योग कारक ग्रह हो तो उसकी दशा में उस से सम्बन्ध करने वाले योगकारी ग्रहकी अन्तर्दशा में जैसा फल होता है वैसाही उससे नहीं सम्बन्ध करने वाले योगकारी ग्रह की भी अन्तर्दशा में होता है ॥ ६ ॥

अन्यद्विशेषमाह ।

**शुभस्यास्य प्रसक्तस्य दशायां योगकारकाः ॥**
**स्वभुक्तिषुप्रयच्छन्ति कुत्रचिद्योगजंफलम् ॥७॥**

योगकारकग्रहाः प्रसक्तस्य सम्बन्धवतोऽस्यशुभग्रहस्य दशायां स्वभुक्तिषुच कुत्राचिद्योगजं फलं प्रयच्छन्ति। राजयोगकारकसम्बन्धिग्रहदशायां यदा राजयोगकारकस्यान्तर्दशा समायति तदापि राजयोगोभवतीति आत्मसम्बन्धिनो येचेत्यत्रविशेषस्वभावरूपफलोक्तिः ॥ ७ ॥

योग कारक ग्रह अपने सम्बन्धि शुभ ग्रह की दशा में और अपनी अन्तर्दशा में भी कहीं कहीं योगज शुभ फल को देता है यह बात शुक्र और शनि में ही होती है ॥ ७ ॥

**तमोग्रहौ शुभारूढावसम्बन्धेन केनचित् ॥**
**अन्तर्दशानुसारेण भवेतां योग कारकौ ॥८॥**

राहुकेत्वोर्विशेषमाह । तमोग्रहौ राहुकेतू यदि शुभारूढौ शुभस्थानं गतौ शुभं नवमं तत्साहचर्यात्पञ्चमञ्च

तत्र यदि समत्रस्थितौ स्यातां तदा सम्बन्धवशात्पूर्वं योगकारित्वं तयोरुक्तमेव सम्बन्ध रहितत्वेपि शुभ-स्थानस्थितिमात्रेणैव योगकारकग्रहदशायां स्वस्वान्तर्दशायां तौ योगकारकौ भवेतामिति ॥ ८ ॥

राहु केतु यदि शुभ स्थान में त्रिकोण में हों तो योग कारक ग्रह की दशा में अपनी अन्तर्दशा में योगकारी ग्रह से सम्बन्ध न होने पर भी योगज शुभफलको ही देते हैं ॥ ॥ ८ ॥

॥ इति दशाफलाध्यायः ॥



# अथ मिश्रकाध्यायः ।

---

पापाः यदि दशानाथाः शुभानां तदसंयुजाम् ॥
भुक्तयः पाप फलदास्तत्संयुक् शुभभुक्तयः ॥ १ ॥
भवन्ति मिश्रफलदा भुक्तयो योगकारिणाम् ॥
अन्त्यन्तपापफलदा भवन्ति तदसंयुजाम् ॥ २ ॥

यदि दशानाथाः पापाःतदा तदसंयुजां तत्सम्बन्धरहितानां शुभानां भुक्तयोन्तर्दशाः पापफलदाः तत् संयुक्शुभभुक्तयः दशानाथसम्बन्धविशिष्टानां शुभानां भुक्तयोन्तर्दशाः मिश्र फलदा भवन्ति तथा तदसंयुजां तेन पापदशानाथेन सम्बन्धरहितानां योगकारकशुभानां भुक्तयोत्यन्तपापफलदाभवन्तीति ॥ १ ॥ २ ॥

यदि दशानाथ पापी ग्रह हो तो उससे नहीं सम्बन्ध करने वाले शुभ ग्रह की अन्तर्दशा में पापफलही होता है और सम्बन्धी शुभ ग्रह की अन्तर्दशा में मिश्र फल होता है और नहीं सम्बन्ध करते हुवे योगकारक शुभ ग्रह की अन्तर्दशा में अत्यन्त पाप फल होता है ॥ १ ॥ २ ॥

सत्यपि स्वेन सम्बन्धे न हन्ति शुभभुक्तिषु ॥
हन्ति सत्यप्यसम्बन्धे मारकः पापभुक्तिषु ॥ ३ ॥

स्वेन सम्बन्धे सत्यपि मारकः स्वदशायां शुभ ग्रहा-न्तर्दशायां न मारयति तथा सम्बन्धाभावेपि पापग्रहा-न्तर्दशासु हन्ति ॥ ३ ॥

मारक ग्रह अपनी दशा में अपने सम्बन्धी शुभ ग्रह की अन्तर्दशा में नहीं मारता पर सम्बन्ध रहित जो पाप ग्रह उस की अन्तर्दशा में मारता है ॥ ३ ॥

परस्परदशायां स्वभुक्तौ सूर्यजभार्गवौ ॥
व्यत्ययेन विशेषेण प्रदिशेतां शुभाशुभम् ॥४॥

सूर्यजभार्गवौ शनिशुक्रौ परस्परदशायां स्वभुक्तौ शुक्रान्तर्दशायां शनिः शनेरन्तर्दशायां शुक्रः इति पूर्वो-क्तलक्षणव्यत्ययेन लक्षणेन विशेषेण शुभाशुभं प्रदि-शेताम् ॥ ४ ॥

शनि और शुक्र परस्पर दशा और अपनी अन्तर्दशा में इसी व्यत्यय से विशेष करके अपना फल देते हैं अथवा शुक्र, शनि सम्बन्धी और शनि, शुक्र सबन्धी फल करता है ॥ ४ ॥

कर्मलग्नाधिनेतारावन्योन्याश्रयसंस्थितौ ॥
राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ५॥

धर्मलग्नाधिनेतारावन्योन्याश्रयसंस्थितौ ॥
राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत् ६॥

इत्युडुदायप्रदीपः समाप्तः ।

---

कर्मलग्नाधिनेतारौ लग्नदशमाधीशौ यद्यन्योन्याश्रयसंस्थितौ तदाराजयोगावितिप्रोक्तमत्र जातोनरो विख्यातो विजयी च भवेत् । तथा लग्ननवमाधीशौ यदि परस्परस्थानगतौ तदा राजयोगाविति भवतः अत्र जातोनरो विख्यातो विजयी च भवेत् । अत्रतु पूर्व लक्षणेन पुनरुक्ति दोषः । परं केन्द्रत्रिकोणाधीशयोः सम्बन्धाभावे भाग्ययोगस्याप्यभावः केन्द्रेशयोः सम्बन्धात् भाग्ययोगकथनाभावात् । अतोऽत्र प्रथमश्लोके लग्नस्यत्रिकोणत्वख्यापनार्थं द्वितीयश्लोके च केन्द्रत्वख्यापनार्थं पृथगुक्तिः तेन न पुनरुक्तिदोषः । प्रथमश्लोके च कर्मपदं केन्द्रबोधकं अन्योन्याश्रयपदं सम्बन्धबोधकं द्वितीयश्लोकेतु धर्मपदं त्रिकोणबोधकं शेषं तथैव । द्वयोर्दशायां योगस्य प्राधान्यात् योगावितिद्विवचनान्तं पदमिति । क्वचित्पुस्तकेषु धर्मकर्माधिनेताराविव्युक्तं तदसङ्गतमिति ॥ ५ ॥ ६ ॥

लग्नेश और कर्मेश अर्थात् केन्द्रेश यदि सम्बन्ध करते हों तो राज योग होते हैं इनमें मनुष्य विख्यात और विजयी होता है । लग्नेश और धर्मेश अर्थात् त्रिकोणेश परस्पर स्थान में हों अर्थात् सम्बन्ध करते हों तो मनुष्य विख्यात और विजयी होता है ॥ ५ ॥ ६ ॥

---

इत्युडुदायप्रदीपापरनामा लघुपाराशरी टीकाद्वयोपेता समाप्ता ।

श्रीगणेशायनमः ।

## अथ लघुपाराशरी प्रारम्भः

पराशरमुनिंनत्वा तस्यहोरां निरीक्ष्य च ॥
वक्ष्येप्युडुदशामार्गं पूर्वशास्त्रानुसारतः ॥ १ ॥
आदित्यप्रमुखाः खेटास्तथा मेषादिराशयः ॥
लोकस्यैवोपकारत्वं कर्तुमर्हन्ति सर्वदा ॥ २ ॥
प्रथमं नवमं चैव धनमित्युच्यते बुधैः ॥
चतुर्थं दशमं प्रोक्तं सुखमेव मनीषिभिः ॥ ३ ॥
अष्टमं ह्यायुषः स्थानमष्टमादष्टमं च यत् ॥
तयोरपि व्ययस्थानं मारकस्थानमुच्यते ॥ ४ ॥
चन्द्रभानू विनासर्वे मारका मारकाधिपाः ॥
षष्ठाष्टमव्ययेशास्तु राहुकेतू तथैव च ॥ ५ ॥
आद्यन्तपौ च विज्ञेयौ चन्द्राक्रान्ताद्ग्रहौ नृणाम् ॥
खरद्रेष्काणपश्चैव तथा वैनाशिकाधिपः ॥ ६ ॥
विपत्ताराप्रत्यरीशौ वधभेशस्तथैव च ॥
मारका जातके प्रोक्ता कालविद्भिर्मनीषिभिः ॥ ७ ॥
अथापरं प्रवक्ष्यामि राजयोगादि संभवम् ॥
ग्रहाणां स्थानभेदेन राशिदृष्टिवशात्फलम् ॥ ८ ॥

## ॥ अथादौग्रहस्थानानि ॥

जन्मकालेतु संप्राप्ते लग्नं निश्चित्यपाण्डितैः ॥
तस्मिन्काले खेचराणां चारंनिश्चित्ययोजयेत् ॥ ९ ॥
पूर्वमायुः परीक्ष्येत् पश्चाल्लक्षणमेवच ॥
नोचेत्तुलक्षणज्ञाने ह्यायाशो व्यर्थमाप्नुयात् ॥ १० ॥
पुनस्तन्वादयोभावाः स्थाप्यास्तेषां शुभाशुभम् ॥
लाभं तृतीयं रन्ध्रं च शत्रुस्थानं व्ययं तथा ॥ ११ ॥
एषां योगेन योभावस्तन्नाशं प्राप्नुयाद्‌ध्रुवम् ॥
चत्वारोराशयो भद्राः केन्द्रकोणशुभावहाः ॥ १२ ॥
तेषां संयोगमात्रेण ह्यशुभोपि शुभो भवेत् ॥
केन्द्राश्चतस्रो विख्याता मुनिभिस्तत्वदर्शीभिः ॥ १३ ॥
तेषां मध्ये तु शुभदौ कर्मबन्धू विशेषतः ॥
अथयोगविभागन्तु वच्मि पूर्वानुसारतः ॥ १४ ॥
पश्यन्ति सप्तमं सर्वे शनिजीव कुजाः पुनः ॥
विशेषतश्च त्रिदशत्रिकोणचतुरष्टमान् ॥ १५ ॥
लक्ष्मीस्थानं त्रिकोणस्याद्विष्णुस्थानं तु केन्द्रम् ॥
तैषां संयोगमात्रेण चक्रवर्तीनरो भवेत् ॥ १६ ॥
तपस्थानाधिपो मन्त्रे मन्त्रनाथेथवागुरौ ॥
उभावन्योन्यसंदृष्टौ जातश्चेद्बहुराज्यभाक् ॥ १७ ॥

यत्र कुत्रापि संयुक्तौ तौ चापि समसप्तगौ ॥
राजवंशोद्भवो बालो राजा भवति निश्चितम् ॥ १८ ॥
वाहनेशे तथामाने मानेशे वाहने गते ॥
बुद्धिधर्माधिपाभ्यान्तु दृष्टौ चेद्बहुराज्यभाक् ॥ १९ ॥
मन्त्रेशकर्मेशसुखेशलग्ननाथास्तथा धर्मपसंयुताश्चेत् ॥
नृपोद्भवश्चेद्बहुवारणाश्वैःस्वतेजसाव्याप्तदिन्तरालम् २०
सुखकर्माधिपौ चैव मन्त्रनाथेन संयुतौ ॥
धर्मनाथेन संदृष्टौ जातश्चेद्बहुराज्यभाक् ॥ २१ ॥
सुतेश्वरोधर्मपसंयुतश्चेल्लग्नेश्वरेणापि युतो विलग्ने ॥
सुखेथवा मानगृहेथ वास्याद्राज्याभिषिक्तोयदिराजवंश्यः २ २

॥ इति प्रथम परिच्छेदः ॥

---

अथापरं प्रवक्ष्यामि धनयोगं विशेषतः ॥
ग्रहाणां स्थानभेदेन राशि दृष्टिवशात्तथा ॥ १ ॥
ये येग्रहा धर्मपबुद्धिपाभ्यां युक्ताश्चदृष्टाश्च सुखप्रदास्ते ॥
रन्ध्रेश्वरारिव्ययपैर्युताः स्युःशोकप्रदा मारकनायकैश्च ॥२॥
क्रूरसौम्यविभागेन स्वस्थानादिवशात्तथा ॥
साहचर्याच्च योगानां धनयोगान्प्रकल्पयेत् ॥ ३ ॥
धर्मस्थाने गुरुक्षेत्रे गुरुशुक्रयुते तथा ॥
पञ्चमाधिपयुक्तेवा बहुद्रव्यस्यनायकः ॥ ४ ॥

पञ्चमे सोमजक्षेत्रे तस्मिन्सौम्ययुते यदि ॥
लाभेसचन्द्रोभौमस्तु बहुद्रव्यस्य नायकः ॥ ५ ॥
पञ्चमे तु भृगुक्षेत्रे तस्मिञ्छुक्रे ससोमजे ॥
लाभेशनैश्चरयुते बहुद्रव्यस्यनायकः ॥ ६ ॥
पञ्चमेतु रविक्षेत्रे तस्मिन्नवियुते यदि ॥
लाभे देवेन्द्रपूज्ये तु बहुद्रव्यस्यनायकः ॥ ७ ॥
पञ्चमेतु शनि क्षेत्रे तस्मिन्सूर्यज संयुते ॥
लाभेश आत्मजयुते बहुद्रव्यस्यनायकः ॥ ८ ॥
पञ्चमेतु गुरुक्षेत्रे तस्मिन् गुरुयुते यदि ॥
लाभे सचन्द्रसौम्येतु बहुद्रव्यस्य नायकः ॥ ९ ॥
पञ्चमेतु शशिक्षेत्रे तस्मिञ्छशियुतेयदि ॥
लाभे भौमेन संयुक्ते बहुद्रव्यस्यनायकः ॥ १० ॥
भानुक्षेत्रेगते लग्ने तस्मिन् भानौयुते यदि ॥
यदि भौमेन गुरुणा दृष्टे स्यादयुतैर्धनैः ॥ ११ ॥
चन्द्रक्षेत्र गते लग्ने तस्मिञ्चन्द्रेगते यदि ॥
जीवभौमयुते दृष्टे जातो धनयशोर्चितः ॥ १२ ॥
भौमक्षेत्रे गतेलग्ने तस्मिन्भौमेन संयुते ॥
गुरुचन्द्रयुते दृष्टे जातोधनयशोर्चितः ॥ १३ ॥
बुधक्षेत्रेगते लग्ने तस्मिन्सौम्ययुते यदि ॥
गुरुचन्द्रयुतेदृष्टे जातोधनयशोर्चितः ॥ १४ ॥

शुक्रक्षेत्रेगते लग्ने तस्मिञ्छुक्रेणसंयुते ॥
शनि सौम्ययुतेदृष्टे जातो धनयशोन्वितः ॥ १५ ॥
शनिक्षेत्रगते लग्ने तस्मिञ्छनियुते यदि ॥
बुधशुक्रयुते दृष्टे जातो धनयशोन्वितः ॥ १६ ॥

॥ इति द्वितीयपरिच्छेदः ॥

---

अथापरं प्रवक्ष्यामि दारिद्र्यं दुःखकारणम् ॥
क्रूरखेटादियोगेश्च दारिद्र्यं संभवेन्नृणाम् ॥ १ ॥
येयेग्रहा धर्मपवुद्धिपाभ्यां युक्ता न दृष्टा वहुदुःखदास्ते ॥
रन्ध्रेश्वरारिव्ययपैर्युताये व्ययप्रदा मारकनायकेन ॥ २ ॥
लग्नाधिपे रिष्फगते रिष्फेशे लग्नमागते ॥
मारकेशयुते दृष्टे जातस्य निधनं वदेत् ॥ ३ ॥
लग्नाधिपे शत्रुगृहे गतेवा षष्ठेश्वरे लग्नगतेऽथवास्ते ॥
विलग्नपे मारकनाथदृष्टे जातो भवेन्निर्धर्मको मनुष्यः॥४॥
लग्नेन्दौ केतुसंयुक्ते लग्नेशे निधनं गते ॥
मारकेशयुतेदृष्टे जातः स्यान्निर्धनोनरः ॥ ५ ॥
षष्ठाष्टमव्ययगते लग्नेशे पापसंयुते ॥
मारकेश युतेदृष्टे राजवंशेपि निर्धनः ॥ ६ ॥
विलग्ननाथे रविणा सरिष्फनाथेन युक्ते यदि पापदृष्टे ॥
मित्रात्मजेनाथ युतेथदृष्ट शुभैर्नदृष्टे स भवेद्दरिद्रः ॥७॥

मन्त्रेशोधर्मनाथश्च षष्ठे त्वाखेस्थितौ क्रमात् ॥
दृष्टौ चेन्मारकेशेन जातः स्यान्निर्धनोनरः ॥ ८ ॥
यद्भावेशे रन्ध्ररिष्फारिसंस्थे यद्भावस्था रन्ध्ररिष्फारिनाथाः॥
पापैर्दृष्टावायुतास्तस्यनाशंदुःखाक्रान्तोनिर्धनश्चञ्चलःस्यात् ९
चन्द्राक्रान्तनवांशेशो मारकेशयुतो यदि ॥
मारकस्थानगोवापि जातस्यान्निर्धनोनरः ॥१०॥
पापग्रहे लग्नगते भाग्यकर्माधिपौ विना ॥
मारकेशयुतेदृष्टे जातः स्यान्निर्धनोनरः ॥११॥
विलग्नेशनवांशेशो रिष्फषष्ठाष्टगो यदि ॥
मारकेशयुतोदृष्टो जातः स्यान्निर्धनोनरः ॥१२॥
धने संस्थौच भौमेन्दू कथितौ धननाशकौ ॥
वुधेक्षितौ महावित्तं कुरुतस्तद्गतः शनिः ॥१३॥
निः स्वतां कुरुते तत्र रविर्नित्यं यमेक्षितः ॥
महाधनयुतं ख्यातं शन्यदृष्टः करोत्यसौ ॥१४॥
धनभावगताः सौम्याः कुर्वन्त्येवधनं बहु ॥
बुधदृष्टो गुरुस्तत्र निर्धनं कुरुतेनरम् ॥१५॥
वुधश्चन्द्रेक्षितस्तत्र सर्वस्वं हन्ति निश्चितम ॥
एतद्धिविबुधैश्चिन्त्यं वलावलविचारतः ॥१६॥

॥ इति तृतीयपरिच्छेदः ॥

---

वक्ष्येहं सारमुद्धृत्य ज्योतिः शास्त्राम्बुधेस्ततः ॥
दशासौख्यप्रदानृणां ग्रहाणां दृष्टियोगतः ॥ १ ॥
तनुनित्यसनादेयास्तथाधान्यासटासना ॥
नेरति संख्या विज्ञेयाः क्रमात्सूर्यादिरश्मयः ॥ २ ॥
स्वदशारामगुणिता तद्दशागुणिता पुनः ॥
खरामभागतो लब्धं फलं मासादिकं भवेत् ॥ ३ ॥
अन्तर्दशां विनिष्कृत्य सर्वाः सम्मीत्य यत्नतः ॥
अरण्येन हरेल्लब्धं दिनं तत्तद्दशाफलम् ॥ ४ ॥
खगुणेन हृताल्लब्धमन्तरान्तर्दशा भवेत् ॥
एवं सूक्ष्मदशां ज्ञात्वा तथा प्राणदशामपि ॥ ५ ॥
आहुः शुभाशुभफलं नृणां कालविदोजनाः ॥
एतत्कृते निर्णयिते ह्यायुषो निश्चयो भवेत् ॥ ६ ॥
पञ्चमेशदशायान्तु धर्मपस्य दशातु या ॥
अतीवशुभदा प्रोक्ता कालविद्भिर्मुनीश्वरैः ॥ ७ ॥
समन्त्रनाथस्य तपोधिपस्य दशाःशुभा राज्यसुतप्रदा स्यात् ॥
सकीर्तिनाथस्य सुखेश्वरस्य दशा तथा प्राहुरुदारचित्ताः ॥ ८ ॥
पञ्चमेशेनयुक्तस्य ग्रहस्य शुभदा दशा ॥
तथा धर्मपयुक्तस्य दशा परम शोभना ॥ ९ ॥
पाददृष्टस्य खेटस्य दशा हानिकरामता ॥
शुभयुक्तस्य खेटस्य दशाद्रव्यप्रदा भवेत् ॥ १० ॥

सपञ्चमेशलग्नेशदशा राज्यप्रदायिनी ॥
तथाधर्मपयुक्तस्य लग्नपस्य दशामता ॥ ११॥
सपञ्चमेशस्य तपोधिपस्य दशाभवेद्राज्यसुखार्थलाभदा ॥
तथैव मानाधिपसंयुतस्य सुतेश्वरस्यापि दशा शुभा स्यात् १२
पञ्चमेशेनयुक्तस्य मानेशस्यदशाशुभा ॥
सुखेशसहितस्यापि धर्मेशस्य दशाशुभा ॥ १३॥
तथा शुभस्थानगमानपस्य तथैव मानार्थसुखप्रदास्यात् ॥
दशा नृणां सौख्यकरीभवेद्धि सुखेशयुक्तस्य च मानपस्य १४
षष्ठस्य सप्तमस्यैकोनायको मानराशिगः ॥
दशातस्य शुभाज्ञेया तथा तेन युतस्य च ॥ १५ ॥
एको द्विसप्तमस्थाननायको यदि सौख्यगः
तेनयुक्तदशा ज्ञेया शुभदाहुर्मनीषिणः ॥ १६ ॥
षष्ठाष्टामव्ययाधीशाः पञ्चमाधिपसंयुताः ॥
तेषां दशा च शुभदा प्रोच्यते काल वित्तमैः ॥ १७ ॥
सुखेशोमानभावस्थो मानेशः सुखराशिगः ॥
तयोर्दशां शुभामाहुर्ज्योतिः शास्त्रविदोजनाः ॥ १८ ॥
सुखेशमानेशसुतेशधर्मपा एकत्रयुक्तायादियत्रकुत्र ॥
तेषां दशा राज्यफलप्रदास्तैर्युक्तग्रहाणामपिदृग्युतैर्वा ॥ १९ ॥
वाहनस्थानसंयुक्तमन्त्रनाथदशाशुभा ॥
सुखराशिस्थकर्मेशदशाराज्यप्रदायिनि ॥ २० ॥

ताभ्यां युक्तस्यखेटस्य दृष्टियुक्तस्यचैतयोः ॥
राज्यप्रदां दशामाहुर्विद्वांसो दैवचिन्तकाः ॥ २१ ॥
कर्मस्थानस्थबुद्धीशदशा सम्पत्करीभवेत् ॥
मानस्थिततपोधीशदशाराज्यप्रदायिनी ॥ २२ ॥

॥ इति चतुर्थपरिच्छेदः ॥

---

अथवक्ष्ये खगेन्द्राणां भुक्तिं पञ्चविधामहम् ॥
दशाचान्तर्दशा चैव ततोपिविदशा तथा ॥ १ ॥
सूक्ष्मभुक्तिः प्राणदशा एवं पञ्चदशाःस्मृताः ॥
लग्नेशे स्वनवांशस्थे तस्यभुक्तिः शुभावहा ॥ २ ॥
स्वद्वादशांशके लग्ननाथे वा स्वदृकाणगे ॥
तस्य भुक्ति शुभामाहुर्यवनाः कालवित्तमा ॥ ३ ॥
स्वत्रिंशांशे तथा मित्रत्रिंशांशेवस्थितोयदि ॥
तस्यभुक्तिः शुभाप्रोक्ता कालविद्भिर्मनीषिभिः ॥ ४ ॥
मित्रक्षेत्रनवांशस्थे मित्रस्य द्विरसांशके ॥
तस्यभुक्तिः शुभाप्रोक्ता कालविद्भिः मुनीश्वरैः ॥ ५ ॥
बुद्धिक्षेत्रनवांशस्थें पुत्रस्यद्विरसांशके ॥
मित्रद्रेष्काणगेवापि तस्यभुक्तिः शुभावहा ॥ ६ ॥
तपोराशिनवांशस्थे धर्मस्यद्विरसांशके ॥
गुरुद्रेष्काणगेवापि तस्यभुक्तिः शुभावहा ॥ ७ ॥

सुखराशिनवांशस्थे वाहनाद्रिरसांशके ॥
सुखद्रेष्काणगे वापि तस्य भुक्तिः शुभावहा ॥ ८ ॥
विलग्ननाथस्थितभांशनाथे मित्रांशके मित्रग्रहेणदृष्टे ॥
सुहृद्दकाणस्यनवांशकेवा तदास्यभुक्तिशुभदां वदन्ति॥ ९॥
अथवक्ष्ये विशेषेण दशाकष्टप्रदा नृणाम् ॥
षष्ठाष्टमव्ययेशानां दशाकष्टप्रदायिनी ॥ १० ॥
मारकेशेनषष्ठेशे युक्ते लग्नाधिपेतथा ॥
तस्यभुक्तौ ज्वरप्राप्तिः प्राहुःकालविदोजनाः ॥ ११ ॥
सरोगेशः शरीरेशश्चन्द्रषड्वर्गगो यदि ॥
जलदोषः तस्य भुक्तौ स्यादजीर्णो न संशयः ॥ १२ ॥
षष्टेशयुक्तलग्नेशो बुधषड्वर्गगो यदि ॥
तस्यभुक्तौ भवेद्वायुः वातोवा देहजाड्यकृत ॥ १३ ॥
सारिनाथविलग्नेशो गुरूषड्वर्गगो यदि ॥
तस्यभुक्तौ भवेद्रोगः पीडावा ब्राह्मणेन तु ॥ १४ ॥
षष्टेशोथ विलग्नेशो भृगुषड्वर्गगो यदि ॥
तस्यभुक्तौ भवेत्पीडा रोगः स्त्रीसङ्गमेन च ॥ १५ ॥
सरोगेशो विलग्नेशः शनिषड्वर्गगो यदि ॥
तस्यभुक्तौ भवेद्वातः सन्निपातोथवानृणाम् ॥ १६ ॥
लग्नेशरोगेशपर्याभवेन्मारकभुक्तिषु ॥
तदाज्ञेयं महत्कष्टं शस्त्राघातादिकं भयम् ॥ १७ ॥

मृतौस्थिताःसैंहिककेतुमन्द महीसुताःस्वासविसूचिकाभिः॥
रोगो नराणामथ तस्यभुक्तौ भवेद्यदामारकसंयुतिश्चेत् ॥१८॥
एवं भ्रात्रादिभावानां नायको यत्र संस्थितः ॥
तत्तत्षड्वर्गयोगेन तत्तद्भावफलं वदेत् ॥ १९ ॥
लग्नेशरोगनाथौ च निधनेशेन संयुतौ ॥
मारकेशयुतौ क्रूरौ रोगनाथांशगौ यदा ॥ २० ॥
तयोर्भुक्तौ विजानीयाद्व्यथा शस्त्रेणवा नृणाम् ॥
शुभयोगे न वाधास्यात्पापयोगेन मृत्युकृत् ॥ २१ ॥
जीवांशजीववर्गेशान् मूलांशान्मूलवर्गतः ॥
रोगादीन्प्रवदेत्तत्र तेषांभुक्तिवशात्फलम् ॥ २२ ॥
विलग्ननाथस्यनवांशनाथो रन्ध्रांशपस्थानपदृष्टि युक्तौ ॥
मेषस्य षड्वर्गगतौ यदातौ भुक्तौ तयोर्जम्बुकभीतितोवधः २३
ओजवर्गगतौ तौ चेद्व्याघ्राद्भीतिं वदेत् नृणाम् ॥
युग्मवर्गगतौ तौ चेत्कपि ना नात्र संशयः ॥ २४ ॥
कुलीरवर्गगौ तौ चेद्रासभाद्भयमादिशेत् ॥
सिंहवर्गगतौ तौ चत्भुक्तौस्याद्व्याघ्रजं भयम् ॥ २५ ॥
अलिव[र्ग]गतौभुक्तौ तयोः सारङ्गजं भयम् ॥
मेषकार्मुकव[र्ग]स्थौ भुक्त्योः स्यादश्वजं भयम् ॥ २६ ॥
कन्यावर्गगतौ चेद्भल्लूकाद्भयमादिशेत् ॥
वणिग्वर्गगतौ तौ चेद्भुक्तौ तेषां मृगाद्भयम् ॥२७॥

मृगवर्गगतौ भुक्तौ तयोः कण्टकजं भयम् ॥
कुंभवर्ग गतौ तौ चेद्गोलाङ्गूलान्महद्भयम ॥ २८ ॥
मीनवर्गगतौ भुक्तौ मेषाश्वग्रहजं भयम् ॥
एवं देहादि भावानां षड्वर्ग गतिभिः फलम् ॥ २९ ॥
लग्नेश्वरोरन्ध्रपतिश्चयुक्तौ वृषेवृषांशे वृषभट्टकाणे ॥
स्थितौ भवेतां यदिवा वृषेण घातात्तयोर्वा मरणं हिभुक्तौ ३०
वृषेयुग्मांशगौतौचेद्व्याघ्रस्याघातजं भयम् ॥
वृषेतुलांशगौतौचेत्कपिना नात्र संशयः ॥ ३१ ॥
वृषेतुलांशगौतौ चेद्व्याघ्राद्वाघाततोमृतिः ॥
वृषे कौर्प्यांशगौतौ चेदश्वात्पीडा प्रजायते ॥ ३२ ॥
वृषेमृगांशगौतौचेन्माहिषेणमृतिर्भवेत् ॥
वृषेमृगांशगौतौ चेद्गोलांगूलान्मृतिं वदेत् ॥ ३३ ॥
वृषे मीनांशगौतौ चेत्तयोर्भुक्तौ मृगाद्भयम् ॥
एवं निश्चित्यमतिमान् पित्रादीनां मृतिं वदेत् ॥ ३४ ॥
शरीरनाथो मरणाधिपेन युक्तो मृगेन्द्रेतु मृगाधिपांशे ॥
तयोर्विपाके भयमाखुना मृतिं सर्पात्तदाप्राहु रुदारचित्ताः ३५
सिंहे कन्यांशगौतौ चेत्कपिना च तदामृतिः ॥
मृगराजे तुलांशस्थौ तयोर्भुक्तौ मृतिं वदेत् ॥ ३६ ॥
अल्यंशगौ मृगेन्द्रे च तयोर्दाये सरीसृपात् ॥
चापांशगौ यदासिंहे तद्वर्षेश्वान्मृति वदेत् ॥ ३७ ॥

मृगांशगौ मृगेन्द्रे च तयोर्दायेखरान्मृतिः ॥
कुंभांशकगतौ तौचेन्मृगराजे नृपाद्भयम् ॥ ३८ ॥
मीनांशकगतौ सिंहे सारङ्गाद्भयमेतयोः ॥
सिंहेमेषांशगौतौ चेद्गोमाथोर्भयमादिशेत् ॥ ३९ ॥
वृषांशगौ च सूर्यर्क्षे तयोर्दायेशुनामृतिः ॥
युग्मांशगौतौ सिंहे च गोलाङ्गूलाद्भयं तयोः ॥४०॥
कर्कांशगौतौ सिंहेतुद्याग्निदाहान्मृतिंगृहे ॥
एवं भ्रात्रादिभावानां तत्तद्भुक्तौ मृतिं वदेत् ॥ ४१ ॥
देहाधिपो मृत्युपसंयुतश्च चापांशगौ कार्मुकराशिगौ चेत् ॥
दाये तयोर्वाजिकृतं च मृत्युंवदन्तितत्कालविदोमहन्ताः ४२
चापे मृगांशगौतौचेत्सारंगाद्भयमेतयोः ॥
हये कुंभांशगौतौ चेद्वराहाद्भयमादिशेत् ॥ ४३ ॥
हये मीनांशगौ नोचेत्पाके नक्राद्भयं भवेत् ॥
मेषांशगौतौचापेतु तयोर्दाये चतुष्पदात् ॥ ४४ ॥
हये वृषांशगौतौ चेद्रासभाद्भयमादिशेत् ।
युग्मांशगौतु चापेतु वानराद्भयमादिशेत् ॥ ४५ ॥
कर्कांशगौ हयाङ्गेतु चाखुना भयमेतयोः ।
सिंहांशगौ हयाङ्गेतु जम्बुकाद्भयमादिशेत् ॥ ४६ ॥
कन्यांशगौतु चापेतु गोलांगूलाद्भयं वदेत् ॥
तुलांशगौ हयांगेतु उष्ट्रान्मरणमेतयोः ॥ ४७ ॥

अल्यंशगौ हयांगेतु तयोर्दाये सरिसृपात् ।
एवं भ्रात्रादिभावानां फलमाहुर्मनीषिणः ॥ ४८ ॥
विलग्नपो नैधननायकश्च मृगे मृगंशावगतौ च युक्तौ ॥
प्रीतिर्भवेदाशुतयोर्हि मुक्तौ विवाहहेतुःप्रवदन्तिसन्तः॥४९॥
कुंभांशगौ मृगांगे च भल्लूकाद्भयमादिशेत् ॥
झषांशगौ मृगांगे च सारङ्गाद्भयमेतयोः ॥ ५० ॥
युग्मांशगौ मृगांगे तौ हरिणान्मृतिरेतयोः ॥
कर्कांशगौ मृगस्ये तौ तयोर्दाये मृतिर्गजात् ॥ ५१ ॥
कौर्प्यांशगौ मृगास्येतु नकूलान्मृतिरेतयोः ॥
चपांशगौ मृगास्ये तौ मार्जारान्मृतिरादिशेत् ॥ ५२ ॥
एवं निश्चित्यमतिमान् पीत्रादीनां फलं वदेत् ॥ ५३ ॥

---

इति निधनहेतुः पञ्चमपरिच्छेदः ।

---

अथवक्ष्ये खगेन्द्राणां जातिभेदात्फलागमम् ॥
बालानां बोधनार्थाय सारं संगृह्यशास्त्रतः ॥ १ ॥
विप्रौदेवेज्यभृगुजौ क्षत्रियौ रविभूमिजौ ॥
वैश्यौ निशाकरबुधौ शनिः शूद्रस्तमोन्त्यजः ॥ २ ॥
मीनादयः क्रमादेते विप्रक्षत्रविशोंघ्रिजाः ॥
एतेषां दृष्टियोगाभ्यां फलमाहुर्मनीषिणः ॥ ३ ॥

सूर्योगुरु कुजः सोमो गुरुर्ज्ञश्च सितः शनिः ॥
गुरुश्चन्द्रेज्यमन्दाश्चकुजश्च भावकारकाः ॥ ४ ॥

मतान्तरेण ।

पिता रविर्मातृकरः शशांको भ्रातावुधार्कौ भृगुनन्दनश्च
भौमः सुतो मित्रग्रहो रविः स्याच्छुभग्रहौ राहुशनैश्चरौस्तः ५

प्रकारान्तरेण ।

पितारविर्मातृकरःशशांकोभ्राता कुजोमातुलवर्गसौम्यः ॥
पुत्रो गुरुःभार्गवकामीनीशो मित्रोरवी राहुशनी च शत्रू॥ ६॥
शनिभौमौपितृक्षेत्रे पक्षा जीवज्ञभार्गवाः ॥
मातुर्भावेतु राजानौ रविचन्द्रमसौ स्मृतौ ॥ ७ ॥
भूसूनुर्नायकोज्ञेयो बुधः सूनुःप्रकीर्तितः ॥
सचिवौ भृगुजीवौ च दृष्टियोगाफलं पृथक् ॥ ८ ॥
शनिं च मेषे पितरमाहुः कालाविदोजनाः ॥
ग्रहाणां फलदातृत्वं तत्तत्पाके विनिर्दिशेत् ॥ ९ ॥
यद्भावेशो यस्य षड्वर्गसंस्थस्तत्तपाकेद्रव्यलाभोनराणाम्
यत्तद्रव्यं तस्य खेटस्यविन्द्यात्तत्तद्रव्यं तस्य पाके वदन्ति १०
पाकेशे भास्करांशस्थे भूपान्मानं विनिर्दिशेत् ॥
अथवा पितृवर्गाद्वा चन्द्रांशान्मातृगतः ॥ ११ ॥
कुजांशात्पुत्रवर्गेण नायकाद्वाफलं वदेत् ॥
सौम्यांशाद्भ्रातृवर्गेण राजपुत्रेण वा फलम् ॥ १२ ॥

गुर्वंशे मातृवर्गेशात् सचिवाद्वाफलं वदेत् ॥
शुक्रांशान्मातृवर्गेण स्त्रीवर्गाद्वाफलं वदेत् ॥१३॥
शन्यंशाच्छूद्रवर्गेण प्रेष्यवर्गात्फलं तथा ॥
राहोः फलं शूद्रवर्गात्केचिदाहुर्मनीषिणः ॥ १४ ॥
पाके फलं पैतृकं न भवेच्चशनिभौमयोः ॥
पाके जीवज्ञशुक्राणां मातुलाद्भृत्यवर्गतः ॥१५॥
दशाविपाके सुरपूजितस्य ब्रह्मत्वतः ब्राह्मणजातिमूलात् ॥
अंशानुरूपं फलमाहुरार्या पाके दशायाश्च वदन्तिधीराः॥१६॥

---

इति षष्टपरिच्छेदः

---

फलानि नक्षत्रदशाप्रकारेण विवृणमहे ॥
दशाविंशोत्तरी चात्र ग्राह्या नाष्टोत्तरीमाता ॥ १ ॥
कृत्तिकर्क्षगणस्तत्र यावज्जन्मर्क्षगं तथा ॥
नवभिश्च हरेद्भागंशेषन्तु स्वदशाभवेत् ॥ २ ॥
रवौ रस विधौ पंक्ति भौमे सप्त विधुन्तुदे ॥
अष्टादश सुराचार्ये षोडशैकोनविंशतिः ॥ ३ ॥
शनौ सप्तदशं: सौम्ये शिखिः सप्तप्रकीर्तितः ॥
नखाःशुक्रस्य विज्ञेया विंशोत्तरशतं मतम् ॥ ४ ॥
रव्यादीनां दशागुण्या त्रिभिः स्वस्वदशाहताः ॥
घस्राद्यन्तर्दशामान विंशोत्तरशतात्मके ॥ ५ ॥

मन्दसौम्यसिताः पापाः शुभौ गुरुदिवाकरौ ॥
न शुभं योगमात्रेण प्रभवेच्छनिजीवयोः ॥ ६ ॥
परतन्त्रस्य जीवस्य पापकर्मापि निश्चितम् ॥
कविः साक्षान्निहन्तास्यान्मारकत्वेन लक्षितः ॥ ७ ॥
मन्दादयो न हन्तारो भवेयुः पापिनो ग्रहाः ॥
शुभाशुभफलान्येवं ज्ञातव्यानि क्रियोद्भवे ॥ ८ ॥
जीवशुक्रेन्दवः पापाः शुभौशनिशशीसुतौ ॥
राजयोगकरः साक्षादेकएव रवेः सुतः ॥ ९ ॥
जीवादयो ग्रहाः पापाः सन्तिमारकलक्षणः ॥
बुधैस्तत्रफलान्येवं ज्ञेयानि वृषजन्मनः ॥ १० ॥
भौमजीवारुणाः पापा एकएवकविः शुभः ॥
शनैश्चरेणजीवस्य योगो मेषभवो यथा ॥ ११ ॥
नायं शशी निहन्तरस्यादुन्मिषत्पापनिष्फलम् ॥
ज्ञातव्यानि द्वन्द्वजस्य फलान्येतानिसूरिभिः ॥ १२ ॥
भार्गवेन्दुसुतापापौ भूसुताङ्गिरसौशुभौ ॥
एकएव भवेत्साक्षाद्भूसुतो योगकारकः ॥ १३ ॥
निहन्ता कविरन्येतु पापिनो मारकाह्वयाः ॥
कुलीरसंभवस्यैवं फलान्यूह्यानि सूरिभिः ॥ १४ ॥
रोहिण्येयसितौ पापौ कुजजीवौ शुभावहौ ॥
प्रभवेद्योगमात्रेण नशुभं कुजशुक्रयोः ॥ १५ ॥

घ्नन्ति सौम्यादयः पापाः मारकत्वेनलाक्षिता ॥
एवं फलानिबेद्यानि सिंहजस्य मनीषिभिः ॥ १६ ॥
कुजजीवेन्दवः पापाः एक एवभृगुः शुभः ॥
भार्गवेन्दुसुतावेव भवतां योगकारकौ ॥ १७ ॥
नहन्ताकविरन्येतु मारकास्ते कुजादयः ॥
प्रतिक्ष्येत फलान्युक्तान्येवं कन्याभवस्यहि ॥ १८ ॥
जीर्वाकभूसुताः पापाः शनैश्चरबुधौ शुभौ ॥
भवेतां राजयोगस्यकारकौ चन्द्रचन्द्रजौ ॥ १९ ॥
कुजोनिहन्ता जीवाद्याः परे मारकलक्षणाः ॥
निहन्तारः फलान्येवं ज्ञातव्यानि तुलाभुवः ॥ २० ॥
सौम्यभौमसिताः पापाः शुभौगुरुनिशाकरौ ॥
सूर्यचन्द्रमसावेव भवेतां योगकारकौ ॥ २१ ॥
जीवो न हन्ता सौम्याद्याः परे मारक लक्षणाः ॥
तत्तत्फलानि विज्ञेयान्येवं वृश्चिकजन्मनः ॥ २२ ॥
एक एव कविः पापः शुभौ भौमदिवाकरौ ॥
योगो भास्करसौम्याभ्यां नतु हन्तांशुमान्सुतः ॥ २३ ॥
घ्नन्ति शुक्रादयः पापा मारकत्वेन लाक्षिताः ॥
ज्ञातव्यानि फलान्येवं धनुषश्च मनीषिभिः ॥ २४ ॥
कुजाजीवेन्दवः पापाः शुभौ भार्गव चन्द्रजौ ॥
स्वयं चैव न हन्ता स्यान्मन्दो भौमादयः परे ॥ २५ ॥

तल्लक्षणा निहन्तारः कविरेकः सुयोगकृत् ॥
ज्ञातव्यानि फलान्येवं बुधैश्च मृगजन्मनः ॥ २६ ॥
जीवचन्द्रकुजाः पापा एकोदैत्यगुरुः शुभः ॥
राजयोगकरोभौमः कविरेवं वृहस्पतिः ॥ २७ ॥
निहन्ता घ्नन्ति भौमाद्या मारकत्वेन लक्षिताः ॥
एवमेव फलान्यूह्यान्येवं हि घटजन्मनः ॥ २८ ॥
मन्दशुक्रांशुमत्सौम्याः पापाः भौमविधू शुभौ ॥
महीसुतगुरू योगकारकौ नैव भूसुतः ॥ २९ ॥
मारको मारकाभिज्ञौ मन्दज्ञौ घ्नन्ति पापिनौ ॥
इत्यूह्यानि बुधैस्तत्र फलानि झष जन्मनः ॥ ३० ॥
एतच्छास्त्रानुसारेण मारकान्निर्दिशेद्बुधः ॥
चन्द्रसूर्यौ विनासर्वे मारकाः परिकीर्तिताः ॥ ३१ ॥
स्वदशायां स्वभुक्तौ च नराणां निधनं नहि ॥
क्वचिद्दशायामिच्छन्ति स्वभुक्तौनकदाचन ॥ ३२ ॥

---

इति सप्तम परिच्छेदः ।

लग्नाच्चिन्त्यं मूर्तिकीर्तिसांगोपाङ्गनिरूपणम् ॥
स्थितिस्वरूपसम्पत्तिर्जन्मलग्नगतं फलम् ॥ १ ॥
धनं सुखं च भुक्तिं च सत्यं च वहुवक्तृतम् ॥
सव्यनेत्राल्पह्वारश्चधनस्थानाद्विचिन्तयेत् ॥ २ ॥

भ्रातृकण्ठौ विक्रमश्च क्षुधाभरणपात्रवान् ॥
भ्रातृस्थानफलं नाम तत्तान्नाम फलं दिशेत् ॥ ३ ॥
वन्धुवाहनमातृश्च सिंहासनसुखं गृहाः ॥
मित्रबाहुरिदंनाम वन्धुस्थानाद्विचिन्तयेत् ॥ ४ ॥
पुत्रो बुद्धिश्च मित्रं च देवताभक्तिरुत्तमा ॥
हृदयंमातुलश्चैव सुतस्थानाद्विचिन्तयेत् ॥ ५ ॥
रिपुज्ञातिवलं रोगमुदरं शत्रुरेव च ॥
षष्ठस्थानमिदं नाम तत्तन्नामफलं दिशेत् ॥ ६ ॥
कलत्रभोगश्छत्रं च दन्तानाभिश्च रोगवान् ॥
गुदं संकरके चैव आयुः स्थानाद्विचिन्तयेत् ॥ ७ ॥
भाग्यं तीर्थं च धर्मं च पितृस्थानमितिक्रमात् ॥
मानराज्यत्यक्तकीर्तिः कर्मव्यापारमेव च ॥ ८ ॥
लाभं च ज्येष्टभ्रातृश्च कर्णजङ्घमितिक्रमात् ॥
रिष्फव्ययं पितृधनं वादयोषादिनाम च ॥ ९ ॥
कुंभकर्कटगोमीन मकरालितुलाधराः ॥
सजलाराशयः प्रोक्ता निर्जलाशेषराशयः ॥ १० ॥
रवि भौमार्कजाः शुक्राः सजलौ चन्द्रभार्गवौ ॥
कुजवाचस्पतीज्ञेयौ सजलौजलराशिगौ ॥ ११ ॥

इति मिश्रप्रकरणमष्टमपरिच्छेदः समाप्तश्चायंग्रन्थः ।

